|| श्रीः ||

गीर्वाणज्योतिः मूलसंस्कृत-संहिता-ग्रन्थमाला

सप्तमं पुष्पम्

श्रीत्रिविक्रमभट्टविरचिता

दमयन्तीकथा

# नलचम्पूः

प्रथमः उच्छ्वासः


सम्पादकः

डॉ. शिवदास कुण्डलिक जाधव






गीर्वाणज्योतिः प्रकाशनम्, सातारा

इ.स. २०२१ प्रथमावृत्तिः शके १९४३

|| श्रीः ||

गीर्वाणज्योतिः मूलसंस्कृत-संहिता-ग्रन्थमाला

सप्तमं पुष्पम्

## श्रीत्रिविक्रमभट्टविरचिता

## दमयन्तीकथा

# नलचम्पूः

## प्रथमः उच्छ्वासः

डॉ. शिवदास कुण्डलिक जाधव

महाराष्ट्रराज्य-महाकवि-कालिदास-संस्कृतसाधना-पुरस्कारेण सम्मानितः

भूतपूर्वः संस्कृत-विभाग-प्रमुखः

छत्रपती शिवाजी महाविद्यालयः, सातारानगरम्




गीर्वाणज्योतिः प्रकाशनम्, सातारा

इ.स. २०२१ प्रथमावृत्तिः शके १९४२

**त्रिविक्रमभट्टविरचिता दमयन्तीकथा**

# नलचम्पूः (प्रथमः उच्छ्वासः)

**=====================================**

| | | |
|---|---|---|
| **सम्पादकः** | : | **डॉ. शिवदास कुण्डलिक जाधव** |
| | | भूतपूर्वः संस्कृत-विभागप्रमुखः, छत्रपतिः शिवाजी महाविद्यालयः, सातारानगरम् |
| **आवृत्तिः** | : | प्रथमा आवृत्तिः |
| **प्रकाशनदिनाङ्कः** | : | ११ मार्च २०२१, माघ-कृ.१३; महाशिवरात्री |
| **प्रकाशिका** | : | **सौ. सुमित्रा जाधव** |
| | : | गीर्वाणज्योति प्रकाशन |
| | | **सातारा शाखा :** |
| | | कारंजकर नगर, पारशी विहिरीजवळ, विलासपूर, सातारा, ४१५००१ |
| | | **पुणे शाखा :** |
| | | एच.१०३, भास्करा सोसायटी, डीसके विश्व, धायरी, पोस्ट नांदेड, पुणे, ४११६८ |
| | | **मुंबई शाखा :** |
| | | ४/४७, उदय को-हौ. सोसायटी, आरे रोड, गोरेगांव [प.], मुंबई, ४००१०४ |
| **संपर्क** | : | **Mobile: +919822097507** |
| **Email** | : | **geerwanajyotiprakashan@gmail.com** |
| **Website** | : | www.geerwanjyoti.in |

# अनुक्रमणिका

श्रीत्रिविक्रमभट्टविरचिता

दमयन्तीकथा

# नलचम्पुः

## प्रथमः उच्छ्वासः

### मङ्गलाचरणम्

जयति गिरिसुतायाः कामसन्तापवाहि-

न्युरसि रसनिषेकश्चानन्दश्चन्द्रमौलिः ।

तदनु च विजयन्ते कीर्तिभाजां कविना-

मसकृदमृतबिन्दुस्यन्दिनो वाग्विलासाः ॥१॥

जयति मधुसहायः सर्वसंसारवल्ली-

जननजरठकन्दः कोऽपि कन्दर्पदेवः ।

तदनु पुनरपाङ्गोत्सङ्गसञ्चारितानां

जयति तरुणयोषिल्लोचनानां विलासः ॥२॥

अगाधान्तः परिस्पन्दं विबुधानन्दमन्दिरम् ।

वन्दे रसान्तरप्रौढं स्रोतः सारस्वतं वहत् ॥३॥

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः ।

भवन्ति कस्यचित्पुण्यैर्मुखे वाचो स्त्रिय: ||४||

किं कवेस्तेन काव्येन किं काण्डेन धनुष्मतः |

परस्य हृदये लग्नं न घूर्णयति यच्छिरः ||५||

अप्रगल्भा: पदन्यासे जननीरागहेतव: |

सन्त्येके बहुलालापा: कवयो बालका इव ||६||

अक्षमालापवृत्तिज्ञा कुशासनपरिग्रहा |

ब्राह्मीव दौर्जनी संसद्वन्दनीया समेखला ||७||

रोहणं सूक्तरत्नानां वृन्दं वन्दे विपश्चिताम् |

यन्मध्यपतितो नीच: काचोऽप्युच्चैर्मणीयते ||८||

अत्रिजातस्य या मूर्ति: शशिन: सज्जनस्य |

क्व सा वै रात्रिजातस्य तमसो दुर्जनस्य ||९||

निश्चितं ससुरः कोऽपि न कुलीनः समेऽमतिः ।
सर्वथासुरसम्बद्धं काव्यं यो नाभिनन्दति ॥१०॥

सदूषणापि निर्दोषा सखरापि सुकोमला।

नमस्तस्मै कृता येन रम्या रामायणी कथा ॥११॥

व्यासः क्षमाभृतां श्रेष्ठो वन्द्यः स हिमवानिव ।
सृष्टा गौरीदृशी येन भवे विस्तारिभारता ॥१२॥

कर्णान्तविभ्रमभ्रान्तकृष्णार्जुनविलोचना ।

करोति कस्य नाह्लादं कथा कान्तेव भारती ॥१३॥

शश्वद्बाणद्वितीयेन नमदाकारधारिणा ।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ॥१४॥

इत्थं काव्यकथाकथानकरसैरेषां कवीनाममी
विद्वांसः परिपूर्णकर्णहृदयाः कुम्भाः पयोभिर्यथा ।
वाचो वाच्यविवेकविक्लवधियामीदग्विधा मादृशां
लप्स्यन्ते क्व किलावकाशमथवा सर्वंसहाः सूरयः ॥१५॥

वाचः काठिन्यमायान्ति भङ्गश्लेषविशेषतः ।
न नोद्वेगस्तत्र कर्तव्यो यस्मानको रसः कवेः ॥१६॥
काव्यस्याम्रफलस्येव कोमलस्येतरस्य च ।
बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ॥१७॥

## कविवंशादिवर्णनम्

अस्ति समस्तमुनिमनुजवृन्दवृन्दारकवन्दनीयपादारविन्दस्य भगवतः विविश्वव्यापिव्यापारपारवश्यादवतीर्णस्य संसारचक्रे क्रतुक्रियाकाण्डशौण्डस्य शाण्डिल्यनाम्नो महर्षेर्वंशः ।

श्रूयन्ते च यत्र श्रवणोचिताश्चन्दनपल्लवा इव केचिदनूचानाः शुचयः सत्य-वाचो विरञ्चिवर्चसोऽर्चनीयाचारा ब्रह्मविदो ब्राह्मणाः | पुण्यजनाश्च न च ये लङ्कापुरुषाः, ससूत्राश्च न च ये लम्पटाः, प्रसिद्धाश्च न च ये लम्पाकाः, कामवर्षाश्च न च ये लङ्घनाः सन्मार्गस्य, नववयसोऽपि न च ये लम्बालकाः, महाभारतिकाश्च न च ये रङ्गोपजीविनः, सेविताप्सरोऽपि न च ये रम्भयान्विताः |

किं बहुना |

जानन्ति हि गुणान्वक्तुं तद्विधा एव तादृशाम् |
वेत्ति विश्वम्भरा भारं गिरिणां गरिमाश्रयम् ||१८||

तेषां वंशे विशदयशसां श्रीधरस्यात्मजोऽभूद्,
देवादित्यः स्वमतिविकसद्वेदविद्याविवेकः |
उत्कल्लोलां दिशि दिशि जनाः कीर्तिपीयुषसिन्धुं,

यस्याद्यापि श्रवणपुटकैः कूणिताक्षाः पिबन्ति ||१९||

तैस्तैरात्मगुणैर्येन त्रिलोक्यास्तिलकायितम् |

तस्मादस्मि सुतो जातो जाड्यपात्रं त्रिविक्रमः ||२०||

सोऽहं हंसायितुं मोहाद् बकः पङ्गुर्यथेच्छति |

मन्दधीस्तद्वदिच्छामि कविवृन्दारकायितुम् ||२१||

भङ्गश्लेषकथाबन्धं दुष्करं कुर्वता मया |

दुर्गस्तरीतुमारब्धो बाहुभ्याममम्भसां पतिः||२२||

उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् |

जानाति हि पुनः सम्यक् कविरेव कवेः श्रमम् ||२३||

(२७) सङ्गता सुरसार्थेन रम्या मे रुचिराश्रया |

नन्दनोद्यानमालेव स्वस्थैरालोक्यतां कथा ||२४||

(२८) उदात्तनायकोपेता गुणवद्वृत्तमुक्तका |

चम्पूश्च हारयष्टिश्च केन न क्रियते हृदि ||२५||

### आर्यावर्तवर्णनम्

(२९) अस्ति समस्तविश्वम्भराभोगभास्वल्ललामलीलायमानः, मानः सेव्यतया नाकलोकस्य, ग्राम्यकविकथाबन्ध इव नीरसस्य मनोहरः, भीम इव भारता-लङ्कारभूतः, कान्ताकुचमण्डलस्पर्श इवाग्रणीः सर्वविषयाणाम्, अनधीतव्याकरण इवादृष्टप्रकृतिनिपातोपसर्गलोपवर्णविकारः, पशुपतिजटाबन्ध इव विकसितकनक-कमलकुवलयोच्छलितरजःपुञ्जपिञ्जरितहंसावतंसया प्रचुरचलच्चकोरचक्रवाक-कारण्डवमण्डलीमण्डिततीरया भगीरथभूपालकीर्तिपताकया स्वर्गगमनसोपानवीथी-यमानरिङ्गत्तरङ्गया गङ्गया पुण्य-सलिलः प्लावितश्चन्द्रभागालङ्कृतैकदेशश्च, सारः सकलसंसारचक्रस्य, शरण्यः पुण्यकारिणाम्, आरामो रामणीयककदलीवनस्य, धाम धर्मस्य, आस्पदं सम्पदाम्,

आश्रय: श्रेयसाम्, आकरः साधुव्यवहाररत्नानाम्, आचार्यभवन-
मार्यमर्यादोपदेशानामार्यवर्तो नाम देश: |

(३०) यस्मिन्ननवरतधर्मकर्मोपदेशशान्तसमस्तव्याधिव्यतिकराः पुरुषायुषजीविन्यः सकलसंसारसुखभाजः प्रजाः। तथा हि, कुष्ठयोगो गान्धिकापणेषु, स्फोटप्रवादो वैयाकरणेषु, सन्निपातस्तालेषु, ग्रहसंक्रान्तिर्ज्योतिः शास्त्रेषु, भूतविकारवादः सांख्येषु, क्षयस्तिथिषु, गुल्मवृद्धिर्वनभूमिषु, गलग्रहो मत्स्येषु, गण्डकोत्थानं पर्वतवनभूमिषु, शूलसम्बन्धश्चण्डिकायतनेषु दृश्यते न प्रजासु।

(३१) यत्र चतुरगोपशोभिताः संग्रामा इव ग्रामाः, तुङ्गसकलभवनाः सर्वत्र नगा इव नगरप्रदेशाः, सदाचरणमण्डनानि नूपुराणीव पुराणि, सदानभोगाः प्रभञ्जना इव जनाः, प्रियालपनसाराणि यौवनानीव वनानि, विटपिहिताश्वटिका इव वाटिकाः, निर्वृतिस्थानानि सुकलत्राणीवेक्षुक्षेत्रसत्राणि, जलाविलक्षणाः पशुपुरुषा इवाप्रमाणास्तडागभागाः, कुपितकपिकुलाकुलिता लङ्कश्वरकिंकरा इव भग्नकुम्भकर्णघनस्वापाः कूपाः, पीवरोधसः सरित इव गावः, सतीव्रतापदोषाः सूर्यद्युतय इव कुलस्त्रियः।

(३२) यत्र च मनोहारिसारसद्वन्द्वास्तत्पुरुषेण द्विगुना चाधिष्ठितः कादम्बरीगद्यबन्धा इव दृश्यमानबहुव्रीहयः केदाराः ।

(३३) किं बहुना ।

(३४) नास्ति सा नगरी यत्र न वापी न पयोधरा।
दृश्यते न च यत्र स्त्री नवा पीनपयोधरा ॥२६॥

(३५) अपि च ।

(३६) भवन्ति फाल्गने मासि वक्षशाखा विपल्लवाः ।
जायन्ते न तु लोकस्य कदापि च विपल्लवाः ॥२७॥

(३७) यत्र सौराज्यरञ्जितमनसः सकलसमृद्धिवर्धितमहोत्सवपरम्परारम्भनिर्भराः सततमकुलीनं कुलीनाः, प्राप्तविमानमप्राप्तविमानभङ्गाः, कतिपयवसुविराजितम-नेकवसवः, समुपहसन्ति स्वर्गवासिनं जनं जनाः ।

(३८) कथं चासौ स्वर्गान्न विशिष्यते । यत्र गृहे गृहे गौर्यः स्त्रियः, महेश्वरो लोकः, सश्रीका हरयः, पदे पदे धनदाः सन्ति लोकपालाः । केवलं न सुराधिपो राजा। न च विनायकः कश्चित् ।

(३९) यत्र च लतासम्बन्धः कलिकोपक्रमश्च पादपेषु दृश्यते, न च पुरुषेषु । यत्र चमरकवार्ता परमहिमोपघातश्च तुहिनाचलस्थलीषु श्रूयते, न प्रजासु ।

(४०) यश्च नीतिमत्पुरुषाधिष्ठितोऽप्यनीतिः सवटोऽप्यवटसंकुलः, कारूपयुतोऽप्यग-तरूपशोभः ।

(४१) यत्र च गुरुव्यतिक्रमं नक्षत्रराशयः, मात्राकलहं लेखशालिकाः, मित्रोदयद्वेषमु-लूकाः, अपत्यत्यागं कोकिलाः, बन्धुजीवविघातं ग्रीष्मदिवसाः कुर्वन्ति, न जनाः।

(४२) किं बहुना ।

(४३) देशः पुण्यतमोद्देशः कस्यासौ न प्रियो भवेत् ।
युक्तोऽनुक्रोशसम्पन्नैर्यो जनैरिव योजनैः ॥२८॥

**निषधापुरीवर्णनम्**

(४४) तस्य विषयस्य मध्ये निषधो नामास्ति जनपदः प्रथितः ।
तत्र पुरी पुरुषोत्तमनिवासयोग्यास्ति निषधेति ॥२९॥

(४५) जननीतिमुदितमनसा सततं सुस्वामिना कृतानन्दा ।
सा नगरी नगतनया गौरीव मनोहरा भाति ॥३०॥

(४६) यस्यामभ्रंलिहेन्द्रनीलशालशिखरसहस्रनिभृतांशुजालबालशाद्वलाङ्कुराग्र-ग्रासलालसाः स्खलन्तः खे खेदयन्ति मध्येदिनं सादिनं रविरथतुरङ्गमाः ।

(४७) यस्यां च स्फटिकमणिशिलानिबद्धभवनप्राङ्गणगतासु सञ्चरद् गृहिणीचरणा-लक्तकपदपङ्क्तिषु पतन्ति निर्मलसलिलाभ्यन्तरतरतरुणारुणकमल-काङ्क्षया मुग्धमधुपपटलानि ।

(४८) यस्यां च विविधमणिनिर्मितवासभवनभव्यभित्तिषु स्वच्छासु स्वां छायाम-वलोकयन्त्यः कृतापरस्त्रीशङ्का कथमपि प्रत्यानीयन्ते प्रियः प्रियतमाः ।

(४९) यस्यां च दिव्यदेवकुलालङ्कृताः स्वर्गा इव मार्गाः, सततमपांसुवसनाः सागरा इव नागराः, समत्तवारणानि वनानीव भवनानि, सुरसेनान्विताः स्वर्गभूपा इव कूपाः, अधिकन्धरोद्देशमुभासयन्तो हारा इव विहाराः ।

(५०) यस्यां च बहुलक्षणाः सुधावन्तो दृश्यन्तेऽन्तःप्रचुराः प्रासादा बहिश्च वारणेन्द्राः, सुशोभितरङ्गाः समालोक्यन्तेऽन्तः संगीतशाला बहिश्च क्रीडाकमल-दीर्घिकाः, बहुधान्यनिरुद्धां कथमप्यभिगम्यन्तेऽन्तःपण्यस्त्रियो बहिश्च क्षेत्रभूमयः, नानाशुकविभूषणाः शोभन्तेऽन्तः सभा बहिश्च सहकारवनराजयः, ससौगन्धिक-प्रसारा विराजन्तेऽन्तर्विपणयो बहिश्च सलिलाशयाः।

(५१) किं बहुना।

(५२) भूमयो बहिरन्तश्च नानारामोपशोभिताः ।
कुर्वन्ति सर्वदा यत्र विचित्रवयसां मुदम् ॥३१॥

(५३) यस्यां च भक्तभाजो देवतायतनेषु देवताः सन्निधाना दृश्यन्ते हट्टेषु वणिग्जनाः, अक्षर-सावधानाः कविगोष्ठीषु कवयो विलोक्यन्ते द्यूतस्थानेषु द्यूतकाराः, कान्तारागप्रियाः करिणो राजद्वारेषु संचरन्ति वेश्याङ्गणेषु भुजङ्गाः।

(५४) यस्यां च चतुरुदधिवेलाविराजितसकलधराचकचूडामणौ, मणिकर्म-निर्मित-रम्यहर्म्यतया सुरपतिपुरीपराभवकारिण्याम् अव्ययभावो व्याकरणोपसर्गेषु न धनिनां धनेषु, दानविच्छित्तिरुन्माद्यत्करिकपोलमण्डलेषु न त्यागिहृदयेषु, भोगभङ्गो भुजङ्गेषु न विलासिलोकेषु, कूटप्रयोगो गीततानविशेषेषु न व्यवहारेषु, वृत्तिकलहो वैयाकरणच्छात्रेषु स्वामिभृत्येषु, स्थानकभेदश्चित्रकेषु न सत्पुरुषेषु ।

(५५) किं बहुना-

(५६) त्रिदिवपुरसमृद्धिस्पर्धया भान्ति यस्यां
सुरसदनशिखाग्रेष्वाग्रहग्रन्थिनद्धाः ।
नभसि पवनवेल्लत्पल्लवैरुल्लसद्भिः
परममिह वहन्त्यो वैभवं वैजयन्त्यः ॥३२॥

(५७) अपि च,

चार्वी सदा सदाचारसज्जसज्जनसेविता ।

नगरी न गरीयस्या सम्पदा सा विवर्जिता ॥३३॥

## अथ नलवर्णनम्

तस्यामासीन्निजभुजयुगलबलविदलितसकलवैरिवृन्दसुन्दरीनेत्रनीलोत्पलगलद्बहलबाष्पपूरप्लवमानप्रतापराजहंसः, सकलजलनिधिवेलावननिखातकीर्तिस्तम्भभूषितभुवनवलयः, विश्वम्भरा-भोग इव बहुधारणक्षमः, प्रासाद इव नव-सुधाहारी, रविरिवानेकधामाश्रयः, दनुजलोक इव सदा-नवः स्त्रीजनस्य, वसिष्ठ इव विश्वामित्रत्रासजननः, जनमेजय इव परीक्षितनयः, परशुराम इव परशुभासितः, राघव इवालघुकोदण्डभङ्गरञ्जितजनकः, सुमेरुरिव जातरूपसम्पत्तिः, तुहिनाचल इव पुण्य-भागीरथीसहितः, चिन्तामणिः प्रणयिनाम्, अग्रणीः सांग्रामिकाणाम्, उपाध्यायो-ऽध्ययनविदाम्, आदर्शो दर्शनानाम्, आचार्यः शौर्यशालिनाम्, उपदेशकः शस्त्रशास्त्रस्य, परिवृढो दृढप्रहारिणाम्, अग्रगण्यः पुण्यकारिणाम्, अपश्चिमो विपश्चिताम्, अपाश्चात्यस्त्यागवताम्, अचरमश्चातुर्याचार्याणाम्, अपर्यन्तभूभाराधारस्तम्भभूतभुजकाण्डकीलितशालभञ्जिकायमानविजयश्रीः, श्रीवीरसेनसूनुः, समस्तजगत्प्रासादशिरः शेखरीभूतकान्तकीर्तिध्वजो राजा राज्यलक्ष्मीकरेणुकाचापलसंयमनशृङ्खलः, खलवृन्दकन्दलदावानलो नलो नाम ।

यस्येन्दुकुन्दकुमुदकान्तयः सकललोककर्णप्रियातिथयो गुणाः सततमेकब्रह्माण्डसम्पुटक-सङ्कीर्णनिवासव्यसनविषादिनः पुनरनेकब्रह्माण्डकोटिघटनामभ्यर्थयमाना इव भगवतो विश्वसृजः कमलसंभवस्य कर्णलग्नाः स्वर्गलोकमधिवसन्ति स्म ।

यस्मिंश्च राजनि जनितजनानन्दे नन्दयति मेदिनीम्, गीतेषु जाति-संकराः, तालेषु नानालयभङ्गाः, नृत्येषु विषमकरणप्रयोगाः, वाद्येषु दण्डकर-प्रहाराः, पुण्यकर्मारम्भेषु प्रबन्धाः, सारिद्यूतेषु पाशप्रयोगाः, पुष्पितकेतकीषु हस्त-च्छेदाः

न्यग्रोधेषु पादकल्पनाः, कञ्चुकमण्डनेषु नेत्रविकर्तनानि आसन्, न प्रजासु ।

यश्च कोऽप्यन्यादृश एव लोकपालः । तथाहि, अपूर्वो विबुधपतिः, अदण्डकरो धर्मराजः, अजघन्यः प्रचेताः, अनुत्तरो धनदः ।

येन प्रचण्डदोर्दण्डमण्डलीविश्रान्तविजयश्रिया लवणोत्पलदलायमानमानिनीमानलुण्टाकलोचनेन पृथ्वी प्रिया च कामरूपधारिणी सातेन भुक्ता । यस्याः सकलजनमनोहारिविशेषकं पृथुललाटमण्डलम्, अभिलषणीयकान्तयः कुन्तलाः, श्लाघनीयो नासिक्यभागः, बहुलवलीकः सरोमालिकालङ्कारश्च मध्यदेशः, प्रकटितकामकोटि-विलासः काञ्चीप्रदेशः। कि बहुना, यस्याः कृष्णागुरुचन्दनामोदबहुलकुचाभोगभूषणा नृत्यतीवाङ्गरङ्गे रमणीयतया निरुपमा नवा यौवनश्रीः ।

किं चान्यत् । अन्य एव नवावतारः स कोऽपि पुरुषोत्तमो यो न मीनरूपदूषितः, नाङ्गीकृतविश्वविश्वम्भराभारोऽपि कूर्मीकृतात्मा, न वराहवपुषा क्लेशेन पृथ्वीं बभार, न च नरसिंहः समुत्सन्नहिरण्यकशपुः, न बलिराजबन्धनविधौ वामनो दैन्यमकरोत्, नापि रामो लङ्केश्वरश्रियमपाहरत्, नापि बुद्धः कल्किकुलावतारी ।

किं बहुना

धन्यास्ते दिवसाः स येषु समभूद् भूपालचूडामणि-
र्लोकालोकगिरीन्द्रमुद्रितमहीविश्रान्तकीर्तिर्नलः ।
लोकास्तेऽपि चिरन्तनाः सुकृतिनस्तद्वक्त्रपङ्केरुहे
यैर्विस्तारितनेत्रपत्रपुटकैर्लावण्यमास्वादितम् ॥३४॥

अपि च ।

ये कुन्दद्युतयः समस्तभुवनैः कर्णावतंसीकृता
यैः सर्वत्र शलाकयेव लिखितैर्दिग्भित्तयश्चित्रिताः ।
यैर्वक्तुं हृदि कल्पितैरपि वयं हर्षेण रोमाञ्चिता-
स्तेषां पार्थिवपुंगवः स महतामेको गुणानां निधिः ॥३५॥

यस्य च युधिष्ठिरस्येव न क्वचिदपार्थो वचनक्रमः मरुमण्डलमिवापापं मानसम्, महानसमिव सूपकारसारं कर्म, कार्मुकमिव सत्कोटिगुणं दानम्, दानव-कुलमिव दृष्टवृषपर्वोत्सवं राज्यम, राजीवमिव भ्रमरहितं सर्वदा हृदयम् । यश्च परमहेलाभिरतोऽप्यपारदारिकः। शान्तनुतनयोऽपि न कुरूपयुक्तः ।

किं बहुना ।

सदाहंसाकुलं बिभ्रन्मानसं प्रचलज्जलम्

भूभृन्नाथोऽपि नो याति यस्य साम्यं हिमाचलः ॥३६॥

(७१) अपि च ।

(७२) नक्षत्रभूः क्षत्रकुलप्रसूतेर्युक्तो नभोगैः खलु भोगभाजः ।

सुजातरूपोऽपि न याति यस्य समानतां काञ्चन काञ्चनाद्रिः॥३७॥

**महामन्त्रि-वर्णनम्**

(७३) तस्य च महामहीपतेरस्ति स्म प्रशस्तिस्तम्भः सकलश्रुतिशास्त्रशासनाक्षर-मालिकानाम्, न्यग्रोधपादपः पुण्यकर्मप्ररोहाणाम्, आकरः साधुव्यवहाररत्नानाम्, इन्दुःपार्थिवनीतिज्योत्स्नायाः, कन्दः सकलकलाङ्कुरकलापस्य, सागरः समस्त-पुरुषगुणमणीनाम्, पालानस्तम्भश्चपलराज्यलक्ष्मीकरेणुकायाः, सकलभुवनव्यापार-पारावारनौकर्णधारः, सुधाम्भोनिधिडिण्डीरपिण्डपाण्डुरयशः कुशेशयखण्डमण्डित-सकलसंसारसराः, सरागीकृतसमस्तपार्थिवानुजीवी, जीवितसमः, प्राणसमः, हृदय-समः, शरीरमात्रभिन्नो द्वितीय इवात्मा, कुलक्रमागतः संक्रान्तिदर्पणः सुखदुःखयोः, स्वभावानुरक्तः, शुचिः, सत्यपूतवाक् कृतज्ञो ब्राह्मणः सालङ्कायनस्य सूनुः श्रुतशीलो नाम महामन्त्री।

**(७४)** मित्रं च मन्त्री च सुहृत्प्रियश्च विद्यावयः शीलगुणैः समानः ।

बभूव भूपस्य स तस्य विप्रो विश्वम्भाराभरसहः सहायः ॥३८॥।

(७५) ब्रह्मण्योऽपि ब्रह्मवित्तापहारी स्त्रीयुक्तोऽपि प्रायशो विप्रयुक्तः।

सद्वेषोऽपि द्वेषनिर्मुक्तचेताः को वा तादृग्दृश्यते श्रूयते वा ॥३९॥

### नृपविलासवर्णनम्

(७६) अथ स पार्थिवस्तस्मिन्नमात्ये परिजनपरिवृढे प्रौढप्रेमणि निगूढमन्त्रे मन्त्रिणि तृणीकृतस्त्रैणविषयरसे सौराज्यरागजनने जननीयमाने जनस्य, सर्वोपधा-शुद्धबुद्धौ निधाय राज्यप्राज्यचिन्ताभारमभिनवयौवनारम्भरमणीये रम्यरमणीजन-नयनहृदयप्रिये प्रियङ्गुभासि जितमदनमहस्यपहसितसुरासुरसौभाग्ययशसि विस्मा-पितसमस्तजनमनसि लसल्लावण्यपुञ्जपराजितसकलसमुद्राम्भसि कान्तिकटाक्षित-चन्द्रमसि वयसि वर्तमानो मानितमानिनीजनयौवनसर्वस्वः स्वयमनवरतं सकल-संसारसुखसन्दोहमन्वभूत् ।

(७७) तथाहि, कदाचिदनुत्पन्नविषमरणो गरुड इवाहितापकारी हरिवाहनविलासमकरोत् । कदाचिच्चन्द्रमौलिरिव मदनबाणासनातिमुक्तशरसंछादितायां पर्वतभुवि विजहार। कदाचिदच्युत इव, शिशिरकमलाकरावगाहनोत्पन्नपुलककोरकिततनुर-नन्तभोगभाक् सुखमन्वतिष्ठत् । कदाचिन्नलिनयोनिरिव राजसभावस्थितः प्रजाव्यापारमचिन्तयत् ।

(७८) कदाचिन्मयूर इव कान्तोन्नमत्पयोधरमण्डलिविलासेन हर्षमभजत् ।

कदाचिन्नक्षत्रराशिरिवाश्विन्या सेनया समन्वितो मृगानुसारी बहुशष्पवनमार्गं बभ्राम । कदाचिदाञ्जनेय इवाक्षविनोदमन्वतिष्ठत् । कदाचिद्वानरेश्वर इव सुग्रीवो वैदेहीति ब्रुवाणस्यालघुकाकुस्थस्यार्थिनः प्रार्थना क्रियतां सफलेति वानरपुंगवानादिदेश।

(७९) कदाचिन्मकरकेतन इव सुमनसो मार्गणान् विधाय स्वगुणं कर्णपूरीचकार । कदाचिदम्भोनिधिरिवोच्चैः स्तननाभिरम्याः, कृतानिमेषनयनविभ्रमाः, सकन्दर्पाः सिषेवे वेलाविलासिनीः। कदाचिद्दशरथ

इवायोध्यायां पुरि स्थितः सुमित्रोपेतो रम-माणरामभरतप्रेक्षणेन क्षण माह्लादमन्वभूत् । एवमस्य सकलजीवलोकसुखसन्तान-मनुभवतो यान्ति दिनानि |

### वर्षावर्णनम्

(८०) अथ कदाचिदुन्नमपेत्ययोधरान्तरपतद्धारावलीविराजिताः, कमलकान्त-नयनाः, सुरचापचक्रवक्रभुवः, विद्युन्मणिमेखलालंकारधारिण्याः, शिञ्जानामुक्तकल-हंसकाः, प्रौढकरेणुसंचारहारिण्यः, कम्रकन्धराः, तिरस्कृतशशाङ्ककान्तिकलापोच्च-मुखमण्डलाः सकलजगज्जेगीयमानगुणमिममनुपमरूपलावण्यराशिराजितं राजानम-वलोकयितुमिवावतरन्ति स्म वर्षाः ।

(८१) आकर्ण्य स्मरयौवराज्यपटहं जीमूतनूत्नध्वनिं
नृत्यत्केकिकुटुम्बकस्य दधतं मन्द्रां मृदङ्गक्रियाम् ।
उन्मीलन्नवनीलकन्दलदलव्याजेन रोमाञ्चिता
हर्षेणेव समुच्छ्रिता वसुमती दध्रे शिलीन्ध्रध्वजान् ॥४०॥
(८२) पर्णैः कर्णपुटायितैर्नवरसप्राग्भारविस्फारितैः
शृण्वन्तो मधुरं द्युमण्डलमिलन्मेघावलीजितम् ।
शाखाग्रग्रथमानसौरभभरभ्रान्तालिपालिध्वजा-
स्तोषेणेव वहन्ति पुष्पपुलकं धाराकदम्बद्रुमाः ॥४१॥

(८३) अथ क्रमेण,
(८४) नीरं नीरजनिर्मुक्तं नीरजस्कं भुवस्तलम् ।
जातं जातिलतापुष्पगन्धान्धमधुपं वनम् ॥४२॥

(८५) धुतकदम्बकदम्बकनिष्पतन्नवपरागपरागममन्थराः ।
हृततुषारतुषा रतिरागिणां प्रियतमा मरुतो मरुतो ववुः ॥४३।।

(८६) ततश्च तिरस्कृततरणित्विषि, विगलद्वारिविप्रुषि, शान्तचातकतृषि, निर्वाणवारणवपुषि, मानिनीमानग्रहग्रन्थिमुषि, जनितजवासकशुषि, विधववधूविद्विषि, वर्धितमण्डूकहृषि, मुद्रितचन्द्र-

मसि, विद्राणपङ्कजसरसि, स्वाधीनप्रियप्रेयसि, प्रोषितकलहंसवयसि, नष्टनक्षत्रमण्डलमहसि, मेचकितनभसि, निष्पतन्नीपरजसि, स्फुटकुटजरजःपुञ्जपिञ्जरिताष्टदिग्भासि, भासुरसुरचाप-चक्रभृति, मयूरमदकृति, महिषशेषहृति, विस्तरत्सरिति, विद्योतमानविद्युति, वहन्मन्दमेघं-करमरुति, हृष्यत्कृषाणयोषिति, पुष्प्यत्केतकीगन्धपानमत्तमधुकृति, प्रोद्भतभूरुहि, दरिद्रनिद्रा-द्रुहि, सगर्वगोदुहि, कदम्बस्तम्बालम्बिमधुलिहि, मुदितमदनाट्टहाहायमानघननादमुचि, पच्य-मानजम्बूफलश्यामलितवनान्तररुचि, रचितपान्थसार्थशुचि, श्रूयमाणमदमधुरमयूरवाचि, विनिद्र-कोशातकीशालिनि, यूथिकाजालिनि, नवमालिकामालिनि, कन्दलभाजि, पच्यमानजम्बूतरुवन-राजिभ्राजि, भिक्षाक्षणक्षपितपरिव्राजि, शान्तसारङ्गरुजि, नीडनिर्माणाकुलबलिभुजि, सान्द्रेन्द्र-गोपयुजि, श्चोतत्तमालधारागृहसदृशि, श्यामायमानदशदिशि, दिवापि श्रूयमानरजनिशङ्काकुल-चक्रवाकचक्रक्रुशि, शकटसञ्चाररुधि, पल्लवितवीरुधि, विश्रान्तजिष्णुक्ष्मापालयुधि, क्षीणोक्षक्षुधि, क्षीरसमुद्रनिद्राणबाणबाहुच्छिदि, सिन्धुरोधोभिदि, दवदहननुदि, विरहिमनस्तुदि, जनितजनमुदि, तापिच्छच्छायानुच्छेदिनि, छन्नकुटीमध्यबध्यमानवाजिनि, विकसितबकुलवनविराजिनि, सीरसी-मन्तितग्रामसीमनि, विजयमानमनोजन्मनि, जाते जगज्जीवनि जीमूतसमये कदाचिदम्भसि दिवसे मृगयावनपालकः प्रविश्य राजानं विज्ञापयामास ।

### शूकरोत्पातवर्णनम्

(८७) देव,

(८८) किं स्यादञ्जनपर्वतः स्फटिकयोर्द्वन्द्वं दधद्दीर्घयो-

रम्भोमेदुरमेघ एष किमुत श्लिष्यद्बलाकाद्वयः ।
शून्यः किं नु करेण कुञ्जर इति भ्रान्तिं समुत्पादयन्
दंष्ट्राद्वन्द्वकरालकालवदनः कोलः कुतोऽप्यागतः ॥४४॥

(८९) ततश्चासौ,

(९०) भिन्दन् कन्दकसेरुकन्दलभृतः स्निग्धप्रदेशान् भुवो
भञ्जन्नञ्जनशैलशृङ्गसदृशः फुल्लल्लतामण्डपान् ।
मन्दं मन्दरलीलयाब्धिसदृशं मथ्नंश्च लीलासरः
क्रोडः क्रीडति भाययन्निव भवत्क्रीडावने रक्षकान् ॥४५॥

## मृगया-विहार-निश्चयः

(९१) राजा तु तदाकर्ण्य चिन्तितवान् -

(९२) “अच्छाच्छैः शुकपिच्छगुच्छहरितैश्च्छन्ना वनान्तास्तृणैः
सेव्या: सम्प्रति सान्द्रचन्द्रकिकुलैरुत्ताण्डवैर्मण्डिताः |
येषु क्षीरविपाण्डुपल्लवपय: कल्लोलयन्तो मनाग्
वाता वान्ति विनिद्रकेतकवनस्कन्धे लुठन्तः शनैः ||४६||

(९३) माद्यन्ति च तेषु संप्रति प्रोथिनः तद्युज्यते |’ इत्यवधारायन्नाहूय बाहुकनामानं सेनापतिमादिदेश - ‘भद्र द्रुतमनुष्ठीयताम्, समादिश्यन्तां कृतवैरिविपत्तयः पत्तयः, पर्याण्यन्तां मनस्तुरगास्तुरगाः सज्जी-क्रियन्तां निजवेगनिर्जितमातरिश्रवान: श्वान:, समारोप्यन्तामपनीताहितायूंषि धनूंषि, गृह्यन्तां निर्मथित-प्रोथियूथ-पाशा: पाशा:’ इति |

(९४) अथ मौलिमिलन्मुकुलितकरकमलयुगलेन सेनापतिना ‘यदाज्ञापयति देव:’ इत्यभिधाय त्वरया तथा कृते सति स्वयमपि,

(९५)निर्मांसं मुखमण्डले परिमितं मध्ये लघुं कर्णयोः
स्कन्धेबन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे |
पीनं पश्चिमपार्श्वयो: पृथुतरं पृष्ठे प्रधानं जवे
राजा वाजिमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ||४७||

## मृगयावर्णनम्

(९६) आरुह्य च क्रमेण कार्दमिककर्पटावनद्धमूर्धजैर्दण्डखण्डपाणिभिः क्रूरकर्मोचि-ताकारैर्वागुरावाहिभिरनन्तैः कृतान्तदूतैरिव पाशहस्तैः पापर्द्धिकैरनु-गम्यमानः, दूरा-दुन्नमितकन्धरैस्तथोर्ध्वकर्णसंपुटैरकाण्डोड्डीनप्राणैरिव वनप्राणि-भिराकर्ण्यमानहर्षि-तहयहेषारव, पवनकम्पिततरुशाखाग्रपल्लवव्याजेन दूरादेवोत्क्षि-प्तहस्ताभिरुड्डीय-मानशकुनिकुलकोलाहलच्छलेन भयान्निवार्यमाण इव वनदेवता-भि: अभिमुखागतैरुन्मिषत्तरुपुष्पप्रपमकरन्दबिन्दुवर्षवाहिभिर्वनविनाशशंकितैरर्घ्य-

मिवोपपादयद्भिरुध्यमान इव वनमारुतैः, उन्निद्रसान्द्रकुसुमकेसराङ्कुरजाल-
जटिलाभिर्भयादुद्गतरोमा-ञ्चप्रपञ्चाभिरिवोद्भ्रान्तभृङ्गरवगद्गदरुदितेन निषिध्य-
मान इव वनवीरुद्भिः, उद्भिन्नभास्वदमन्दकन्दलावलोकनेनानन्द्यमानः श्वानु-
गतोऽप्य श्वानुगत: सगजमप्यगजं तद्वनमाससाद ।

ततश्च केचिदुद्यत्परश्वधा गणपतयः, केऽपि दृष्टसिंहिकासुतविक्रमा: शश-
धरा: केऽपि पाशपाणयो जम्बुकदिक्पालाः, केऽपि हरिमार्गानुसारिणौ बलभद्राः,
केऽपि चक्रपाणयो: मधुसूदनाः, केऽपि शिवागमावर्तिनो रुद्राः, केऽप्याहिताग्नयो
विप्रलोकाः, केऽपि खण्डिताञ्जनाधरप्रवाला: प्रभञ्जनाः, केऽप्युत्खातदन्तिदन्तमु-
ष्टयो निस्त्रिंशाः तस्य पृथ्वीपतेराकुलितश्वापदा: पदातयो वनं रुरुधु: ।

ततश्च तैः क्रियन्ते विकलभा वननिकुञ्जाः कुञ्जराश्च, ध्रियन्तेऽनेकधार-
यातिपातिन: खड्गाः खङ्गिनश्च, कृष्यन्ते कूजन्तः कोदण्डदण्डा गण्डकाश्च,
निक्षिप्यन्ते परित: शरा: शरभाश्च, भज्यन्ते तरवस्तरक्षवश्च ।

क्षणेन च पतन्ति पीवरा वराहाः, सीदन्ति दन्तिनः, विरसं रसन्ति सातङ्का
रङ्कवः, प्रकाशैलं शैलं भयादारोहन्ति रोहिताः, शरसङ्घातघूर्णिता यान्ति महीं
महिषाः, दुर्गसंश्रयं श्रयन्ते तरलितनेत्राश्चित्रकाः, त्वरिततरं तरन्तीवोत्पतन्तो नभ-
सि निजवननिर्जिततुरङ्गाः कुरङ्गाः ।

तत्र च व्यतिकरे,

जाताकस्मिकविस्मयैः किमिदमित्याकर्ण्यमानः सुरैः

सन्त्रासोज्झितकर्णतालचलनान् दिग्दन्तिनः कम्पयन् ।

जन्तूनां जनितज्वरः स मृगयाकोलाहलः कोऽप्यभूद्

येनेदं स्फुटतीव निर्भरभृतं ब्रह्माण्डभाण्डोदरम् ॥४८॥

### शूकर-दर्शनम्

राजाप्येकशरप्रहारपातितमत्तमातङ्गः सर्वतो विहारिहरिहरिणशशकशम्बर-
वराहहननहेलया विचरन्नितस्ततस्तरुणतरतमालमञ्जरीजालनीलोद्घुषितस्कन्ध-

केसरम्, ऊर्ध्वस्तब्धकर्णसम्पुटम्, अश्वचक्राय क्रुध्यन्तम्, आघूर्णितघोणम्, अनवरतकृतघनघोरघर्घररवम्, उत्क्षिप्तपुच्छगुच्छम्, अभिमुखमेकस्मिन्नतिसान्द्रभद्रमुस्तास्तम्बभाजि पङ्किलपल्वलप्रदेशे तं शूरशूकरमपरमिव दवदहनदग्धाद्रिमद्राक्षीत् ।

### शरवर्षणं द्वन्द्वयुद्धं च

दृष्ट्वा च रचितशरसन्धानलाघवो राघव इव राक्षसेश्वरस्य तस्योपरि परिणद्धविविधपत्रैः पतत्रिभिरभ्यवर्षत् । तत्र च व्यतिकरे,

किमश्वः पार्श्वेषु प्लवनचतुरः किं नु नृपतिः

शरान्मुञ्चन्नुच्चैश्चलतरकराकृष्टधनुषा ।

किमालोल: कोलः परिहृतशरः शौर्यरसिको

न जानीमस्तेषां क इह परमो वर्ण्यत इति ॥४९॥

अपि च

अजनि जनितपृथ्वीमण्डलोत्पादकम्पं
किमपि चलितशैलं द्वन्द्वयुद्धं तयोस्तत् ।

स्खलिततुरगवेगो विस्मयनैष यस्मिन्
दिनपतिरपि शौर्याश्चर्यसाक्षी बभूव ॥५०॥

### शूकरजयो राज्ञो विश्रामश्च

अथ कथमपि नाथं प्रोथियूथस्य जित्वा
ज्वरित इव विशालं सालसः सालले ।

सुखमभजत राजा राजमानः श्रमाम्भ:-
कणकलितकपोलालोललीलालकेन ॥५१॥

तत्र स्थितं श्रममुकुलितनयनारविन्दम्, आन्दोलयन्तः कुसुमिततरून्, तरलयन्तः शिखिशिखण्डमण्डलानि, ताण्डवयन्तस्तनुलतापल्लवनिवहान्, वहन्तो वहन्निर्झरजलशिशिरशीकरनिकरान्, करालयन्तः कुटजकुड्मलानि, मकरन्दबिन्दुमुचो मन्दमानन्दयामासुः कम्पितनीपवनाः पवनाः ।

अनन्तरमनवरतकरालकाककौलेयककुलकवलनाकुलितकोलकरिकुरङ्गकण्ठीरवकिशोरदृषत्पृष्ठधाविते परितः परिजने, जनितविविधमृगवधूवधव्याधीन् व्याधान् निवारयितुमिवान्तरान्तरा प्रसारितकरे मध्यस्थतां गतवति गभस्तिमालिनि, सहसंवर्धितमृगविनाशशोकभरादिव वनवीरुधां पतत्सु पुष्पलोचनेभ्यो बाष्पेष्विव मध्याह्नोष्णविलीनमकरन्दबिन्दुषु, श्रूयमाणेषु वनदेवतानां वनविमर्दोपालम्भेष्विव तरुखण्डोड्डीनविविधविहङ्गविरुतेषु, विघटिट्तार्भककुरङ्गकुटुम्बिनीकरुणकूजितव्याजेनान्यायमिव पूत्कुर्वतीषु वनराजिषु, इतस्ततः संचरच्चटुलतरतुङ्गखुरशिखरशिखोत्खातधरणिमण्डलाद्वनविनाशवार्तां गगनचरेभ्यः कथयितुमिवोत्पतितेऽम्बरतलम् अकृतपरित्राणे च मूर्छित इव पुनः पुनः पतति भुवि भवनपारावतपतत्रिपत्रघूसरे धूलिपटले, सकम्पकपिकलापोल्ललनलुलिततरुतरुणमञ्जरीपुजनिकुञ्जाद् उद्वेजिते मञ्जु गुञ्जति वनान्तरमपरमुच्चलिते चञ्चलचञ्चरीकचक्रवाले, चङ्क्रमणक्रमेण च सम्पन्ने सैन्यस्य श्रमावसरे तस्यैव सरससरलशालद्रुमस्याधस्तान्निषण्णे श्रमभाजि राजनि

## पथिकस्यागमनम्

अकस्मात्कुतोऽपि,

वल्लीवल्कपिनद्धधूसरशिराः स्कन्धे दधद्दण्डकं

ग्रीवालम्बितमृन्मणिः परिकुथत्कौपीनवासाः कृशः ।

एकः कोऽपि पटच्चरं चरणयोर्बद्ध्वाऽध्वगः श्रान्तवा-

नायातः क्रमुकत्वचा विरचितां भिक्षापुटीमुद्वहन् ॥५२॥

आगत्य च राजानमवलोक्य सविस्मयमेव चिन्तयांचकार ।

'अब्जश्रीसुभगं युगं नयनयोर्मौलिमहोष्णीषवा-

नूर्णारोमसखं मुखं च शशिनः पूर्णस्य धत्ते श्रियम् ।

पद्म पाणितले गले च सदृशं शङ्खस्य रेखात्रयं

तेजोऽप्यस्य यथा तथा सजलधेः कोऽप्येष भर्ता भुवः ॥५३॥

तदेवंविधाः खलु महनीया महानुभावा भवन्ति' इत्येवमवधार्य समुपसृत्य 'स्वस्ति स्वकान्तिनिर्जितमकरध्वजाय तुभ्यम्' इत्यवादीत् ।

### राज्ञः कुतूहलम्

राजापि सविस्मयमना मनागुन्नमितमस्तकः स्वागतप्रश्नेनाभिनन्द्य "तीर्थयात्रिकः, कुतः ? प्रष्टव्योऽसि, क्व च कियच्चद्याद्यापि गन्तव्यम् | उपविश विश्रम्य कथय काञ्चिदपूर्वां किंवदन्तीम् | अनेकदेशदृश्वानः किलाश्चर्य-दर्शिनो भवन्तीति | न चाकस्मिकं दर्शनमपूर्वः परिचयः स्वल्पा प्रीतिरित्येकमप्या-शङ्कनीयम् | अपूर्वदर्शनेऽपि न जात्या मणयःस्वच्छतामपह्नुवते | तदेहि | मुहू-र्तमेकत्र गोष्टीसुखमनुभवावः" इत्येनमवादीत् |

### विदर्भवर्णनम्

असावपि 'अपूर्वकौतुककथाकर्णनरसिक, श्रूयतां यद्येवम्' इत्यभिधाय सुखोपविष्टस्यास्य समीपे स्वयमुपविश्य कथयितुमारभत |

'अस्ति स्वर्गसमः समस्तजगतां सेव्यत्वसंख्याग्रणी-

र्देशो दक्षिणदिङ्मुखस्य तिलकः स्त्रीपुंसरत्नाकरः |

यस्मिंस्त्यागमहोत्सवव्यसनिभिर्धन्यैरशून्या जनै-

रुद्देशाः स्पृहणीयभावभरिताः कं नोत्सुकं कुर्वते ||५४||

कथं चासौ न प्रशस्यते, यत्र त्रिपुरपुरन्ध्रितिलकहारिणा हरिविरञ्चिचूडामणि-मरीचिचक्रचकोरचुम्बितचरणनखचन्द्ररुचिनिचयेन भगवता सेव्यते सेव्यतयाऽपह-सितकैलासश्रीः श्रीशैलः शूलपाणिना |

यत्र च विकचविविधवनविहारसुरभिसमीरणान्दोलितकदलीदलव्यजनवीज्य-मानविधुवनविनोदखेदविद्राणनिद्रालुद्रविडमिथुनसनाथपरिसराः सरसघननिचूल-तलचलच्चकोरचक्रवाककुल-कपिञ्जलमयूरहारीतहारिण्यो नाकलोक कमनीयतां कलयन्ति कलमकेदारसाराः सरससहकार-कारस्कराः कावेरीतीरभूमयः |

किं बहुना ---

अस्तु स्वस्ति समस्तरत्ननिधये श्रीदक्षिणस्यै दिशे

स्वर्गस्पर्धिसमृद्धये हृदयहृद्गोदावरीरोधसे ।

यत्र त्रस्तकुरङ्गकार्भकदृशः संभोगलीलाभुवः

सौख्यस्यायतनं भवन्ति रसिकाः कन्दर्पशस्त्रं स्त्रियः ॥५५॥

तत्र प्रणतसुरासुरशिर: शोणमरीचिचयबहलकुङ्कुमानुलेपपल्लवितपादारविन्दद्वयस्य क्रौञ्चभिदो भगवत: सुगन्धिगन्धमादनाधिवासिन: स्कन्ददेवस्य दर्शनार्थमितो गतवानस्मि । तस्माच्च निवर्तमानेन क्वचिदेकस्मिन्नध्वरोधिनि न्यग्रोधपादतले दीर्घाध्वश्रान्तेन विश्राम्यतां मया श्रूयतां यदाश्चर्यमालोकितम् ।

### राजपुत्रीवर्णनम्

अतिललितपदविन्यासससारसाधुसिन्धुस्कन्धमधिरूढा, प्रौढसखीसहायप्राया, प्रान्तपतच्चा-रुचामरमरुन्नर्तितालकवल्लरी, कर्णकुवलयालङ्कारधारिणी, रुचिररुचिमच्चरणनूपुरा, पुर: सरस-रागगान्धर्विककण्ठमन्दराविनि: सरत्सरसगीतप्रेङ्खोलनप्रयोगेषु दत्तावधाना, नेत्रे मनाङ्मीलयन्ती, ध्रीयमाणमायूरातपत्रमण्डला, मण्डलितमदनचापचक्रवक्रभ्रू:, भूपालपुत्रिका कापि क्वापि कुतोऽप्यु-च्चलिता तदेव न्यग्रोधपादपच्छायामण्डपमशिश्रियत् ।

तां चालोक्य चिन्तितवानस्मि विस्मितमना: --

‘किं लक्ष्मी: स्वयमागता मुररिपोर्देवस्य वक्ष:स्थलात्

कोपात्पत्युरुतावतारमकरोद् देवी भवानी भुवि ।

श्यामाम्भोजसदृक्षपक्ष्मलचलन्नेत्रामिमां पश्यतो

धातस्तात करोषि किं न वदने चक्षु: सहस्रं मम ॥५६॥

अपि च

इन्दोः सौन्दर्यमास्यं कलयति कमलस्पर्धिनी नेत्रपत्रे

कालिन्द्याः कुन्तलाली तुलयति विभवं भव्यभङ्गैस्तरङ्गैः ।

तस्याः किं श्लाघ्यतेऽन्यत्सुभगगुणनिधेः काव्यपूर्वैव यस्याः

पुष्पेषोर्वैजयन्ती जयति युवजनोन्मादिनी यौवनश्रीः ॥५७।।

अपि च—

आकारः स मनोहरः स महिमा तद्वैभवं तद्वयः

सा कान्तिः स च विश्वविस्मयकरः सौभाग्यभाग्योदयः ।

एकैकस्य विशेषवर्णनविधौ तस्याः स एव क्षमो

यस्य स्यादुरगप्रभोरिव मुखे जिह्वासहस्रद्वयम् ॥५८॥

सापि यथा त्वमिदानीं मामिह पृच्छसि तथार्धपथमिलितं कञ्चिदुदीचीनमध्वगं दक्षिणस्यां दिशि प्रस्थितमादरेण पृच्छन्ती मुहूर्तमिव तत्रैव विश्रमितुमारभत। श्रुतश्चायं मयापि तेन तस्याः पुरः कस्यचिदुदीच्यनरपतेः श्लाघ्यमानकथावशेषालापः ।

तस्मिन् स्मितमुखे यूनि यूपदीर्घभुजद्वये।

ते धन्या न्यपतन् येषां कन्दर्पसदृशे दृशः ॥५९॥

किं बहुना

सा त्वं मन्मथमञ्जरी स च युवा भृङ्गस्तवैवोचितः

श्लाघ्यं तद्भवतोः किमन्यदपरं किं त्वेतदाशास्महे ।

भाग्यर्योग्यसमागमेन युवयोर्मानुष्यमाणिक्ययोः

श्रेयानस्तु विधेर्विचित्ररचनासंकल्पशिल्पश्रमः ॥६०॥

तन्न जाने स कः सुकृती तेन तस्याः श्रवणादेवोल्लसद्बहुलपुलकाङ्कुरोत्तम्भितांशुकायाः पुरो विस्तरेणैवं वर्णितः । न च मयापि विस्मयविस्मृतविवेकन केयं कस्येयं कुत्र कुतो वा प्रस्थितेति प्रश्नाग्रहः कृतः । केवलमदृष्टपूर्वरूपोत्पन्नाकस्मिन्नाककौतुकातिरेकास्तमितसमस्तान्यव्यापारेणैकाग्रतया ग्रहनिरुद्धेनेवान्धे-

नेव मूकनेव मूर्छितेनेव विषविघूर्णितेनेव स्तोभस्तम्भितेनेव गतायामपि तस्यां तेनाध्वनीनेन सह तत्रेव न्यग्रोधतरुतले सुचिरमासितमासीत् ।

तदायुष्मन्नेष कथितः स्ववृत्तान्तः । तस्यां दिशि तया सकलजगज्ज्यो-त्स्नया, अस्मिन्नपि देशे निःशेषजननयनकुमुदेन्दुना त्वया दृष्टेन दृष्टं यद् द्रष्टव्यम् । अभूच्च मे श्लाघ्यं जन्म। जाते कृतार्थे चक्षुषी। सम्पन्नः सफलः परिभ्रमणप्रयासः। तदिदानीं किमन्यत् । अनुमन्यस्व स्वविषयगमनाय माम् इत्यभिधाय व्यरंसीत् ।

### राज्ञश्चिन्ता

राजाप्येतदाकर्ण्य चिन्तितवान् --

स्त्रीमाणिक्यमहाकरः स विषयः पान्थोऽप्ययं तथ्यवाग्

व्यापारोऽपि विधेर्विचित्ररचनस्तत्किं न संभाव्यते ।

किं त्वाश्चर्यमदृष्टरूपविभवाप्याकर्ण्यमाना सती
कान्तेत्युन्नतचेतसोऽपि कुरुते नाम्नैव निम्नं मनः ।।६१।।

तथा हि --
नो नेत्राञ्जलिना निपीतमसकृत्तस्याः स्वरूपामृतं

नो नामान्वयपल्लवोऽपि च मया कर्णावतंसीकृतः ।

चित्रं चुम्बति चुम्बकाश्मकमयो यद्वद्बलाद्दूरत-
स्तद्वत्तर्जितधैर्यमेतदपि मे तस्यां मनो धावति ॥६२।।

सोऽयं दुर्लभेष्वनुरागः पुसाम्, अज्वरमस्वास्थ्यम्, अदौर्गत्यं दौःस्थ्यम्, अविषास्वादनमाघूर्णनम्, असाध्वसं कम्पनम्, अनात्मविक्रयं पारवश्यम्, अजरं जाड्यम्, अनिन्धनं ज्वलनम्, अलग्नग्रहमुन्मादनम्, अवात्याघातमुद्भ्रमणम्, अमौनं मौक्यम्, अहीनश्रुति बाधिर्यम्, अनष्टदृष्टिकमन्धत्वम्, अस्खलितमनोरथं मनः स्तम्भनम्, अमन्त्र आवेशः। सर्वथा नमः सुस्थितजनदुर्जनाय मनोजन्मने,

यस्यायमेवंविधो व्यापारः ।

## पथिक-विसर्जनम्

इत्यवधारयन्नवतार्य सर्वाङ्गेभ्यो भूषणानि तस्मै सदयमदात् । तैस्तैरालापैः स्थित्वा च कञ्चित्समयमिममथ यथाप्रस्थितं पान्थं कथमपि प्रेषयामास ।

स्वयमपि तत्कालान्तरालमिलितैर्नक्षत्रैरिव सार्द्रमगशिरोहस्तैः सश्रवणचित्रकृत्तिकोप-स्करवाहिभिः पापर्द्धिकपरिजनैरनुगम्यमानो राजा निजावासमयासीत् ।

## राजदशा-वर्णनम्

ततः प्रभृति च ।

हृद्योद्यानमरुत्तरङ्गितसरित्तीरे तरूणामध-

स्तल्पेऽनल्पसरोजिनीनवदलप्रायेऽपि खिन्नात्मनः ।

धीरस्यापि मनाङ्मनस्तुणकुटीकोणान्तराले बला-

ल्लग्नोऽस्येति विभाव्यते परवशैरङ्गरनङ्गानलः ॥६३॥

एवमस्य,

पुनरपि तदभिज्ञान् पृच्छतः पान्थसार्थान्

प्रतिपथमथ यूनो यान्ति तस्य क्रमेण

हरचरणसरोजद्वन्द्वमुद्राङ्कमौले-

र्मदनमदनिवासा वासराः प्रावृषेण्याः ॥६४॥

|| इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हरचरणसरोजाङ्कायां प्रथमः उच्छ्वासः समाप्तः ||१||

# परिशिष्टम्

## चरणानुक्रमणिका

| पादप्रतीकम् | श्लोकक्रमः | पादक्रमः |
|---|---|---|
| जयति गिरिसुतायाः कामसन्तापवाहि- | 1 | a |
| न्युरसि रसनिषेकश्चानन्दश्चन्द्रमौलिः | 1 | b |
| तदनु च विजयन्ते कीर्तिभाजां कविना- | 1 | c |
| मसकृदमृतबिन्दुस्यन्दिनो वाग्विलासाः | 1 | d |
| जयति मधुसहायः सर्वसंसारवल्ली- | 2 | a |
| जननजरठकन्दः कोऽपि कन्दर्पदेवः | 2 | b |
| तदनु पुनरपाङ्गोत्सङ्गसञ्चारितानां | 2 | c |
| जयति तरुणयोषिल्लोचनानां विलासः | 2 | d |
| अगाधान्तः परिस्पन्दं | 3 | a |
| विबुधानन्दमन्दिरम् | 3 | b |
| वन्दे रसान्तरप्रौढं | 3 | c |
| स्रोतः सारस्वतं वहत् | 3 | d |
| प्रसन्नाः कान्तिहारिण्यो | 4 | a |
| नानाश्लेषविचक्षणाः | 4 | b |
| भवन्ति कस्यचित् | 4 | c |
| पुण्यैर्मुखे वाचो स्त्रियः | 4 | d |
| किं कवेस्तेन काव्येन | 5 | a |

| | | |
|---|---|---|
| किं काण्डेन धनुष्मतः | 5 | b |
| परस्य हृदये लग्नं | 5 | c |
| न घूर्णयति यच्छिरः | 5 | d |
| अप्रगल्भा: पदन्यासे | 6 | a |
| जननीरागहेतव: | 6 | b |
| सन्त्येके बहुलालापा: | 6 | c |
| कवयो बालका इव | 6 | d |
| अक्षमालापवृत्तिज्ञा | 7 | a |
| कुशासनपरिग्रहा | 7 | b |
| ब्राह्मीव दौर्जनी संसद् | 7 | c |
| वन्दनीया समेखला | 7 | d |
| रोहणं सूक्तरत्नानां | 8 | a |
| वृन्दं वन्दे विपश्चिताम् | 8 | b |
| यन्मध्यपतितो नीच: | 8 | c |
| काचोऽप्युच्चैर्मणीयते | 8 | d |
| अत्रिजातस्य या मूर्ति: | 9 | a |
| शशिन: सज्जनस्य | 9 | b |
| क्व सा वै रात्रिजातस्य | 9 | c |
| तमसो दुर्जनस्य | 9 | d |
| निश्चितं ससुरः कोऽपि | 10 | a |
| न कुलीनः समेऽमतिः | 10 | b |
| सर्वथासुरसम्बद्धं | 10 | c |
| काव्यं यो नाभिनन्दति | 10 | d |
| दूषणापि निर्दोषा | 11 | a |
| सखरापि सुकोमला | 11 | b |
| नमस्तस्मै कृता येन | 11 | c |
| रम्या रामायणी कथा | 11 | d |
| व्यासः क्षमाभृतां श्रेष्ठो | 12 | a |
| वन्द्यः स हिमवानिव | 12 | b |
| सृष्टा गौरीदृशी येन | 12 | c |
| भवे विस्तारिभारता | 12 | d |
| कर्णान्तविभ्रमभ्रान्त- | 13 | a |
| कृष्णार्जुनविलोचना | 13 | b |

| | | |
|---|---|---|
| **करोति कस्य नाह्लादं** | 13 | c |
| **कथा कान्तेव भारती** | 13 | d |
| **शश्वद्बाणद्वितीयेन** | 14 | a |
| **नमदाकारधारिणा** | 14 | b |
| **धनुषेव गुणाढ्येन** | 14 | c |
| **निःशेषो रञ्जितो जनः** | 14 | d |
| इत्थं काव्यकथाकथानकरसैरेषां कवीनाम- | 15 | a |
| विद्वांसः परिपूर्णकर्णहृदयाः कुम्भाः पयो- | 15 | b |
| वाचो वाच्यविवेकविक्लवधियामीदृग्विधा | 15 | c |
| लप्स्यन्ते क्व किलावकाशमथवा सर्वंसहाः | 15 | d |
| वाचः काठिन्यमायान्ति | 16 | a |
| भङ्गश्लेषविशेषतः | 16 | b |
| न नोद्वेगस्तत्र कर्तव्यो | 16 | c |
| यस्मानको रसः कवेः | 16 | d |
| काव्यस्याम्रफलस्येव | 17 | a |
| कोमलस्येतरस्य च | 17 | b |
| बन्धच्छायाविशेषेण | 17 | c |
| रसोऽप्यन्यादृशो भवेत् | 17 | d |
| जानन्ति हि गुणान्वक्तुं | 18 | a |
| तद्विधा एव तादृशाम् | 18 | b |
| वेत्ति विश्वम्भरा भारं | 18 | c |
| गिरिणां गरिमाश्रयम् | 18 | d |
| तेषां वंशे विशदयशसां श्रीधरस्यात्मजोऽभू- | 19 | a |
| देवादित्य: स्वमतिविकसद्वेदविद्याविवेक: | 19 | b |
| उत्कल्लोलां दिशि दिशि जना: कीर्तिपीयु- | 19 | c |
| यस्याद्यापि श्रवणपुटकैः कूणिताक्षाः पिब- | 19 | d |
| तैस्तैरात्मगुणैर्येन | 20 | a |
| त्रिलोक्यास्तिलकायितम् | 20 | b |
| तस्मादस्मि सुतो जातो | 20 | c |
| जाड्यपात्रं त्रिविक्रम: | 20 | d |
| सोऽहं हंसायितुं मोहाद् | 21 | a |
| बकः पङ्गुर्यथेच्छति | 21 | b |
| मन्दधीस्तद्वदिच्छामि | 21 | c |

| | | |
|---|---|---|
| कविवृन्दारकायितुम् | 21 | d |
| भङ्गश्लेषकथाबन्धं | 22 | a |
| दुष्करं कुर्वता मया | 22 | b |
| दुर्गस्तरीतुमारब्धो | 22 | c |
| बाहुभ्याममम्भसां पतिः | 22 | d |
| उत्फुल्लगल्लैरालापाः | 23 | a |
| क्रियन्ते दुर्मुखैः सुखम् | 23 | b |
| जानाति हि पुनः सम्यक् | 23 | c |
| कविरेव कवेः श्रमम् | 23 | d |
| सङ्गता सुरसार्थेन | 24 | a |
| रम्या मे रुचिराश्रया | 24 | b |
| नन्दनोद्यानमालेव | 24 | c |
| स्वस्थैरालोक्यतां कथा | 24 | d |
| उदात्तनायकोपेता | 25 | a |
| गुणवद्वृत्तमुक्तका | 25 | b |
| चम्पूश्च हारयष्टिश्च | 25 | c |
| केन न क्रियते हृदि | 25 | d |
| नास्ति सा नगरी यत्र | 26 | a |
| न वापी न पयोधरा | 26 | b |
| दृश्यते न च यत्र स्त्री | 26 | c |
| नवा पीनपयोधरा | 26 | d |
| भवन्ति फाल्गने मासि | 27 | a |
| वक्षशाखा विपल्लवाः | 27 | b |
| जायन्ते न तु लोकस्य | 27 | c |
| कदापि च विपल्लवाः | 27 | d |
| देशः पुण्यतमोद्देशः | 28 | a |
| कस्यासौ न प्रियो भवेत् | 28 | b |
| युक्तोऽनुक्रोशसम्पन्नै- | 28 | c |
| र्यो जनैरिव योजनैः | 28 | d |
| तस्य विषयस्य मध्ये निषधो | 29 | a |
| नामास्ति जनपदः प्रथितः | 29 | b |
| तत्र पुरी पुरुषोत्तम- | 29 | c |
| निवासयोग्यास्ति निषधेति | 29 | d |

| | | |
|---|---|---|
| जननीतिमुदितमनसा | 30 | a |
| सततं सुस्वामिना कृतानन्दा | 30 | b |
| सा नगरी नगतनया | 30 | c |
| गौरीव मनोहरा भाति | 30 | d |
| भूमयो बहिरन्तश्च | 31 | a |
| नानारामोपशोभिताः | 31 | b |
| कुर्वन्ति सर्वदा यत्र | 31 | c |
| विचित्रवयसां मुदम् | 31 | d |
| त्रिदिवपुरसमृद्धिस्पर्धया भान्ति यस्यां | 32 | a |
| सुरसदनशिखाग्रेष्वाग्रहग्रन्थिनद्धाः | 32 | b |
| नभसि पवनवेल्लत्पल्लवैरुल्लसद्भिः | 32 | c |
| परममिह वहन्त्यो वैभवं वैजयन्त्यः | 32 | d |
| चार्वी सदा सदाचार- | 33 | a |
| सज्जसज्जनसेविता | 33 | b |
| नगरी न गरीयस्या | 33 | c |
| सम्पदा सा विवर्जिता | 33 | d |
| धन्यास्ते दिवसाः स येषु समभूद् भूपाल- | 34 | a |
| र्लोकालोकगिरीन्द्रमुद्रितमहीविश्रान्तकीर्ति- | 34 | b |
| लोकास्तेऽपि चिरन्तनाः सुकृतिनस्तद्वक्त्र- | 34 | c |
| यैर्विस्तारितनेत्रपत्रपुटकैर्लावण्यमास्वादित- | 34 | d |
| ये कुन्दद्युतयः समस्तभुवनैः कर्णाव- | 35 | a |
| यैः सर्वत्र शलाकयेव लिखितैर्दिग्भित्तय- | 35 | b |
| यैर्वक्तुं हृदि कल्पितैरपि वयं हर्षेण | 35 | c |
| स्तेषां पार्थिवपुंगवः स महतामेको गुणानां | 35 | d |
| सदाहंसाकुलं बिभ्रन् | 36 | a |
| मानसं प्रचलज्जलम् | 36 | b |
| भूभृन्नाथोऽपि नो याति | 36 | c |
| यस्य साम्यं हिमाचलः | 36 | d |
| नक्षत्रभूः क्षत्रकुलप्रसूतेर् | 37 | a |
| युक्तो नभोगैः खलु भोगभाजः | 37 | b |
| सुजातरूपोऽपि न याति यस्य | 37 | c |
| समानतां काञ्चन काञ्चनाद्रिः | 37 | d |
| मित्रं च मन्त्री च सुहृत्प्रियश्च | 38 | a |

| | | |
|---|---|---|
| विद्यावयः शीलगुणैः समानः | 38 | b |
| बभूव भूपस्य स तस्य विप्रो | 38 | c |
| विश्वम्भाराभरसहः सहायः | 38 | d |
| ब्रह्मण्योऽपि ब्रह्मवित्तापहारी | 39 | a |
| स्त्रीयुक्तोऽपि प्रायशो विप्रयुक्तः। | 39 | b |
| सद्वेषोऽपि द्वेषनिर्मुक्तचेताः | 39 | c |
| को वा तादृग्दृश्यते श्रूयते वा | 39 | d |
| आकर्ण्य स्मरयौवराज्यपटहं जीमूतनू-- | 40 | a |
| नृत्यत्केकिकुटुम्बकस्य दधतं मन्द्रां | 40 | b |
| उन्मीलन्नवनीलकन्दलदलव्याजेन | 40 | c |
| हर्षेणेव समुच्छ्रिता वसुमती दध्रे शिलीन्ध्र- | 40 | d |
| पर्णैः कर्णपुटायितैर्नवरसप्राग्भारविस्फारितैः | 41 | a |
| शृण्वन्तो मधुरं द्युमण्डलमिलन्मेघावली- | 41 | b |
| शाखाग्रग्रथमानसौरभभरभ्रान्तालिपालि- | 41 | c |
| स्तोषेणेव वहन्ति पुष्पपुलकं धाराकदम्ब- | 41 | d |
| नीरं नीरजनिर्मुक्तं | 42 | a |
| नीरजस्कं भुवस्तलम् | 42 | b |
| जातं जातिलतापुष्प- | 42 | c |
| गन्धान्धमधुपं वनम् | 42 | d |
| **धुतकदम्बकदम्बकनिष्पतन्** | 43 | a |
| **नवपरागपरागममन्थराः** | 43 | b |
| **हृततुषारतुषा रतिरागिणां** | 43 | c |
| **प्रियतमा मरुतो मरुतो ववुः** | 43 | d |
| किं स्यादञ्जनपर्वतः स्फटिकयोर्द्वन्द्वं | 44 | a |
| रम्भोमेदुरमेघ एष किमुत श्लिष्यद्बलाका- | 44 | b |
| शून्यः किं नु करेण कुञ्जर इति भ्रान्तिं | 44 | c |
| दंष्ट्राद्वन्द्वकरालकालवदनः कोलः कुतो- | 44 | d |
| भिन्दन् कन्दकसेरुकन्दलभृतः स्निग्ध- | 45 | a |
| भञ्जन्नञ्जनशैलशृङ्गसदृशः फुल्लल्लता- | 45 | b |
| मन्दं मन्दरलीलयाब्धिसदृशं मथ्नंश्च | 45 | c |
| क्रोडः क्रीडति भाययन्निव भवत्क्रीडावने | 45 | d |
| अच्छाच्छैः शुकपिच्छगुच्छहरितैश्च्छन्ना | 46 | a |
| सेव्याः सम्प्रति सान्द्रचन्द्रकिकुलैरुत्ताण्डवै- | 46 | b |

| | | |
|---|---|---|
| येषु क्षीरविपाण्डुपल्लवपय: कल्लोलयन्तो | 46 | c |
| वाता वान्ति विनिद्रकेतकवनस्कन्धे | 46 | d |
| निर्मांसं मुखमण्डले परिमितं मध्ये लघुं | 47 | a |
| स्कन्धेबन्धुरमप्रमाणमुरसि स्निग्धं च | 47 | b |
| पीनं पश्चिमपार्श्वयो: पृथुतरं पृष्ठे प्रधानं | 47 | c |
| राजा वाजिमारुरोह सकलैर्युक्तं प्रशस्तै- | 47 | d |
| जाताकस्मिकविस्मयैः किमिदमित्या- | 48 | a |
| सन्त्रासोज्झितकर्णतालचलनान् दिग्दन्ति- | 48 | b |
| जन्तूनां जनितज्वरः स मृगयाकोलाहलः | 48 | c |
| येनेदं स्फुटतीव निर्भरभृतं ब्रह्माण्ड- | 48 | d |
| किमश्वः पार्श्वेषु प्लवनचतुरः किं नु | 49 | a |
| शरान्मुञ्चन्नुच्चैश्चलतरकराकृष्टधनुषा | 49 | b |
| किमालोल: कोलः परिहृतशरः शौर्यरसिको | 49 | c |
| न जानीमस्तेषां क इह परमो वर्ण्यत इति | 49 | d |
| अजनि जनितपृथ्वीमण्डलोत्पादकम्पं | 50 | a |
| किमपि चलितशैलं द्वन्द्वयुद्धं तयोस्तत् | 50 | b |
| स्खलिततुरगवेगो विस्मयनैष यस्मिन् | 50 | c |
| दिनपतिरपि शौर्याश्चर्यसाक्षी बभूव | 50 | d |
| अथ कथमपि नाथं प्रोथियूथस्य जित्वा | 51 | a |
| ज्वरित इव विशालं सालसः सालमूले | 51 | b |
| सुखमभजत राजा राजमानः श्रमाम्भ:- | 51 | c |
| कणकलितकपोलालोललीलालकेन | 51 | d |
| वल्लीवल्कपिनद्धधूसरशिराः स्कन्धे | 52 | a |
| ग्रीवालम्बितमृन्मणिः परिकुथत्कौपीनवा- | 52 | b |
| एकः कोऽपि पटच्चरं चरणयोर्बद्ध्वा- | 52 | c |
| नायातः क्रमुकत्वचा विरचितां भिक्षापुटी- | 52 | d |
| अब्जश्रीसुभगं युगं नयनयोर्मौलिमहोष्णी- | 53 | a |
| नूर्णारोमसखं मुखं च शशिनः पूर्णस्य धत्ते | 53 | b |
| पद्म पाणितले गले च सदृशं शङ्खस्य | 53 | c |
| तेजोऽप्यस्य यथा तथा सजलधेः कोऽप्येष | 53 | d |
| **अस्ति स्वर्गसम: समस्तजगतां सेव्यत्व-** | 54 | a |
| **र्देशो दक्षिणदिङ्मुखस्य तिलक: स्त्रीपुंस-** | 54 | b |
| **यस्मिंस्त्यागमहोत्सवव्यसनिभिर्धन्यैर-** | 54 | c |

| | | |
|---|---|---|
| रुद्देशाः स्पृहणीयभावभरिताः कं नोत्सुकं | 54 | d |
| अस्तु स्वस्ति समस्तरत्ननिधये श्री- | 55 | a |
| स्वर्गस्पर्धिसमृद्धये हृदयहृद्गोदावरी- | 55 | b |
| यत्र त्रस्तकुरङ्गकार्भकदृशः संभोगलीला- | 55 | c |
| सौख्यस्यायतनं भवन्ति रसिकाः कन्दर्प- | 55 | d |
| किं लक्ष्मी: स्वयमागता मुररिपोर्देवस्य | 56 | a |
| कोपात्पत्युरुतावतारमकरोद् देवी भवानी | 56 | b |
| श्यामाम्भोजसदृक्षपक्ष्मलचलन्नेत्रामिमां | 56 | c |
| धातस्तात करोषि किं न वदने चक्षु: | 56 | d |
| इन्दोः सौन्दर्यमास्यं कलयति कमल- | 57 | a |
| कालिन्द्याः कुन्तलाली तुलयति विभवं | 57 | b |
| तस्याः किं श्लाघ्यतेऽन्यत्सुभगगुणनिधेः | 57 | c |
| पुष्पेषोर्वैजयन्ती जयति युवजनोन्मादिनी | 57 | d |
| आकारः स मनोहरः स महिमा तद्वैभवं | 58 | a |
| सा कान्तिः स च विश्वविस्मयकरः | 58 | b |
| एकैकस्य विशेषवर्णनविधौ तस्याः स एव | 58 | c |
| यस्य स्यादुरगप्रभोरिव मुखे जिह्वासहस्र- | 58 | d |
| तस्मिन् स्मितमुखे यूनि | 59 | a |
| यूपदीर्घभुजद्वये | 59 | B |
| ते धन्या न्यपतन् येषां | 59 | c |
| कन्दर्पसदृशे दृशः | 59 | d |
| सा त्वं मन्मथमञ्जरी स च युवा भृङ्ग- | 60 | a |
| श्लाघ्यं तद्भवतोः किमन्यदपरं किं त्वेतदा- | 60 | b |
| भाग्ययोर्ग्यसमागमेन युवयोर्मानुष्य- | 60 | c |
| श्रेयानस्तु विधेर्विचित्ररचनासंकल्पशिल्प- | 60 | d |
| स्त्रीमाणिक्यमहाकरः स विषयः पान्थो- | 61 | a |
| व्यापारोऽपि विधेर्विचित्ररचनस्तत्किं न | 61 | b |
| किं त्वाश्चर्यमदृष्टरूपविभवाप्याकर्ण्यमाना | 61 | c |
| कान्तेत्युन्नतचेतसोऽपि कुरुते नाम्नैव | 61 | d |
| नो नेत्राञ्जलिना निपीतमसकृत्तस्याः | 62 | a |
| नो नामान्वयपल्लवोऽपि च मया कर्णा- | 62 | b |
| चित्रं चुम्बति चुम्बकाश्मकमयो यद्वद्बला- | 62 | c |
| स्तद्वत्तर्जितधैर्यमेतदपि मे तस्यां मनो | 62 | d |

| | | |
|---|---|---|
| **हृद्योद्यानमरुत्तरङ्गितसरित्तीरे तरूणामध-** | 63 | a |
| **स्तल्पेऽनल्पसरोजिनीनवदलप्रायेऽपि** | 63 | b |
| **धीरस्यापि मनाङ्मनस्तुणकुटीकोणान्तराले** | 63 | c |
| **ल्लग्नोऽस्येति विभाव्यते परवशैरङ्गर-** | 63 | d |
| **पुनरपि तदभिज्ञान् पृच्छतः पान्थसार्थान्** | 64 | a |
| **प्रतिपथमथ यूनो यान्ति तस्य क्रमेण** | 64 | b |
| **हरचरणसरोजद्वन्द्वमुद्राङ्कमौले-** | 64 | c |
| **र्मदनमदनिवासा वासराः प्रावृषेण्याः** | 64 | d |

# ग्रंथ व हस्तलिखिते यांविषयी विनम्र आवाहन

---

ग्रंथ व हस्तलिखिते ही ज्ञानाचा खजिना आहेत, अनेक घरात बंदिस्त कपाटात हा दुर्मिळ खजिना धुळीत लोप पावत आहे. आम्ही आपणांस विनम्रपणे आवाहन करतो की, आपल्याकडे असलेले छापील व हस्तलिखित साहित्य, नियतकालिके, मासिके (जुनी,नवीन) 'संस्कृत ग्रंथालया'कडे जमा करावे. या ग्रंथालयाकडे संस्कृत वाङ्मय व संत साहित्य विषयक दुर्मिळ ग्रंथ जमा आहेत . अनेक अभ्यासक, संशोधक यांचा लाभ घेत आहेत. आपला बहुमूल्य ठेवा पुढच्या पिढीला ज्ञानासाठी मिळत राहील. तरी आपण सहकार्य करावे.ही विनंती.

इच्छुकांनी पुढील पत्त्यावर संपर्क साधावा.

**गीर्वाणज्योति संस्कृत ग्रंथालय,**
**कारंजकरनगर, पारशी विहिरीजवळ,**
**विलासपूर, सातारा – ४१५ ००१**
**(सं.क्र. ९८२२०९७५०७)**
E-mail: geerwanlib@gmail.com




# गीर्वाणज्योति प्रकाशन

## संस्कृत नेट/ सेट परीक्षा देणाऱ्यांसाठी सुवर्ण संधी

Subject code = 25

## संस्कृत NET/ JRF/ SET

## online सराव प्रश्नपत्रिका

- अभ्यासक्रमातील १० ही घटकांवर प्रश्न
- प्रश्नांची पुनरावृत्ती नाही
- प्रश्नांची तात्काळ उत्तरे
- प्रगती आलेख
- प्रतिसंच= १२ प्रश्नपत्रिका = १२०० प्रश्न
- सोडवलेली प्रश्नपत्रिका अनेकदा सोडवू शकता
- मोबाईलवर देखील प्रश्नपत्रिका सोडवू शकता

Subscribe करण्यासाठी खालील link वर click करा.

https://forms.gle/k9cEunP8ahTJXWKr5

**SUBSCRIPTION FEE:**

**प्रति संच = रु.५००/-**

**एकूण ३ संच= रु.१५००/-**

नमुना प्रश्नपत्रिकेसाठी खालील link वर click करा.

https://forms.gle/AHZYx35me7i1em687

**पैसे भरण्यासाठी संपर्क :-**
गीर्वाणज्योति प्रकाशन,
पारशी विहिरीजवळ, कारंजकरनगर,
विलासपूर, सातारा, महाराष्ट्र ४१५००१
**भ्रमणध्वनी ९१+ : ९८२२०९७५०७**

**ONLINE PAYMENT:**

ACCOUNT NAME – GEERWANJYOTI

ACCOUNT NO. 037004042209195001

IFSC - CSBK0000370

BANK NAME - CATHOLIC SYRIAN BANK (CSB)

BRANCH – SATARA

**UPI**- geerwanajyotiprakashan@oksbi

Gpay- 9822097507












# गीर्वाणज्योती प्रकाशन, सातारा

1. मैत्री शुद्धलेखनाशी, प्रा.गजानन चव्हाण , डॉ.शिवदास जाधव
2. छात्र संस्कृत शब्दकोश, डॉ.शिवदास जाधव व डॉ. नीलेश जोशी
3. Experimental Psychology, Maragam
4. निवडक अप्रसिद्ध उपनिषदे, डॉ. नीलेश जोशी
5. भामिनी विलास: प्रास्ताविक – अन्योक्ति – विलास:,डॉ.शिवदास जाधव
6. सार्थ निघण्टुकोश,डॉ. नीलेश जोशी
7. विभक्त्यर्थ प्रकरण, डॉ.शिवदास जाधव, डॉ. नीलेश जोशी
8. संज्ञाप्रकरणम्, डॉ.शिवदास जाधव
9. महात्मा गांधीप्रणीत शिक्षण संकल्पना, प्रा. सुरेखा मत्सावार
10. The Glorious Symbols of India as UNESCO's World Heritag, Prof. Sandeep Dhikale
11. अभितः परितः, डॉ. सौ. प्रज्ञा शरद देशपांडे
12. अनन्तयात्रा , ज्योती पुजारी
13. अथातो ब्रह्मजिज्ञासा- डॉ. शैलजा बापट
14. साहित्यदर्पणः- प्रथम-परिच्छेदः- डॉ.शिवदास जाधव, डॉ. नीलेश जोशी
15. पाण्डुरङ्गाष्टकम् डॉ.शिवदास जाधव
16. श्रीकल्किस्तोत्रम् डॉ.शिवदास जाधव
17. मराठीचे संशोधन (भाषा आणि साहित्य)- डॉ. अनिल गवळी
18. रघुवंशम् प्रथमः सर्गः- मराठी अनुवाद, परिशिष्टे- डॉ. शिवदास जाधव, डॉ. शशिकांत दरगू
19. वेदान्तसारः- डॉ. शिवदास जाधव
20. तर्कभाषा - डॉ. शिवदास जाधव
21. नलचम्पूः - डॉ. शिवदास जाधव
22. ईशावास्योपनिषत् - डॉ. शिवदास जाधव


- Contact Us:
- Geerwanjyoti Publication,
- Karanjkarnagar, Near Parashi Vihir, Vilaspur, Satara, Maharashtra, India. 41500
- Mobile: +919822097507